# संस्कृतवार्ता

दिनाङ्कः- 26-11-2020

सायम् - 06:20

अनुवादकौ –

आशुलिपिका - नवनीत कौरः

इयम् आकाशवाणी

सम्प्रति वार्ताः श्रूयन्ताम्

प्रवाचकः –

## मुख्य-वार्ताः

- संविधानदिवसम् अद्य अखिलमपि राष्ट्रं परिपाल्यते। प्रत्येकस्मिन् वर्षे नवम्बर मासस्य षड्विंशे दिवसे आमान्यते अयं दिवस:।
- प्रधानमन्त्रिणा श्रीनरेन्द्रमोदीना अखिलभारतीय-पीठासीन-अधिकारिणां सम्मेलनस्य समापनसत्रं स्वीकृतम्।
- केन्द्रशासितजम्मूकश्मीर राज्ये आतंकवादिभि: भारतीय सैन्यबलस्य त्वरितप्रतिकारबलं आलक्ष्य गोलिका: प्रहृता:। द्वौ भटौ वीरगतिं प्रापतवन्तौ।
- अखिलदेशे कोविड नवदश महामार्या: स्वस्थतामिति: षड्-षड् दशमलवोत्तर त्रिनवति प्रतिशतं जातम्।
- निवाराख्यो चक्रवार्तस्य शिथिलताया: संभावना प्रकटिता।
- **अपि च**
- प्रधानमन्त्री श्रीनरेन्द्रमोदी अद्य सायंकाले वैश्विकनवीकरणीय ऊर्जा-निवेशकानां उपवेशनं तथा प्रदर्शन्या: उद्घाटनं करिष्यति।

--------

**संविधान दिवसः**

अद्य राष्ट्रपतिना श्री रामनाथ कोविन्देन संविधानदिवसम् आलक्ष्य भारतस्य संविधानस्य प्रस्तावनायाः पाठः प्रोक्तः। अमुना राष्ट्रपति भवनतः पाठोऽयं प्रोक्तः यस्य दूरदर्शयेन प्रसारणं कृतम् देशस्य विभिन्नेभ्यः श्रेत्रेभ्यः जनाः सम्मेलिताः। अखिलभारतीय-पीठासीन-अधिकारिणः अशीतितमें सम्मेलने भागं भजमानाः अधिकारिभिः अपि राष्ट्रपतिना सह पाठं पठिताः।

**प्रधानमन्त्री संबोधन केवडिया**

प्रधानमन्त्रिणा नरेन्द्रमोदिना गुजरात-राज्यस्य केवडियायां प्रचाल्यमाणस्य पीठासीन-अधिकारिणां-अखिल-भारतीय सम्मेलनस्य समापनसत्रं सम्बोधितम्। प्रधानमन्त्रिणा समुदीरितम् यत् भारतं आतंकवादं सम्मुखीकर्तुं नूतन नीत्याधारेण आचरति। दृश्य-श्रव्य-इति अन्तर्जालीय-माध्येमेन अस्य सत्रस्य समापनसत्रं सम्बोधयता रीमोदी अवादीत् यत् भारत् कदापि अस्य शताबदस्य एकादशे वर्षे नवम्बर मासस्य षड्विंशे दिवसे विहितं आतंवाद्याक्रमणं कदापि मुम्बइयां नैव विस्मर्तुं शक्नोति। तेन प्रोक्तं पाकिस्तानीयैः आतंकवादिभिः विहिते अस्मित् आक्रमणे दैशिकाः वैदिशिकाः निरपराधजनाः, आरक्षिकर्मिणः दिवंगताः आसन्। प्रधानमन्त्रिणा मोदिना भारतीय संविधानस्य महत्त्वमपि सबलं प्रतिपादितम्। तेन प्रोक्तं

महात्मगान्धिन: मतं आसीत् यत् अधिकार-कर्तव्यौ अन्तरा वर्तते घनिष्ठ सम्बन्ध: इति। ध्यानास्पदं वर्तते यत् द्वि-दिवसीयं इदं सम्मेलनं राष्ट्रपतिना, उपराष्ट्रपतिना अपि सम्बोधितम् अस्ति।

**जम्मू-कश्मीरे आतंकवादी-आक्रमणम्**

जम्मूकश्मीरस्य श्रीनगरे भारतीयसुरक्षाबलै: अनुक्षणं प्रतिक्रिया। आतंकवादिभि: कृतस्य गोलिकाप्रहारस्य। अस्मिन् प्रहारे द्वौ भटौ वीरतां गतौ। सैन्यबलेन तत्क्षेत्रे अन्वीक्षणाभियानं प्रचालितम्।

**कोविड अपडेट**

भारतं कोरोना इति वैश्विकसंक्रमणं विरुध्य अनारतं साफल्यम् अधिगच्छति। अनवरतं ऊनविंश-दिवसं प्रत्यह्नि पंचाशत् सहस्रतो नैयून्यम् कोरोना प्रकरणानि। विगते अहोरात्रे चतुश्चत्वारिंशत्-सहस्र संख्याकानि नूतनप्रकरणानि पंजीकृतानि। अपरत: षड्त्रिंश-सहस्रसंख्याका: जना: पूर्णरूपेण आरोग्यं प्राप्य सकुशलं गृहम् उपेता:। साम्प्रतं यावत् देशे नव-सप्तत्यधिक-षडाशीति-लक्षाधिका: रोगिण: स्वस्थीभूता:, अपि च कोरोना प्रत्यवाप्तिमिति: षड्-षड् दशमलवोत्तर त्रिनवति प्रतिशतं संवृतम्। उपचार्यमाणानां संख्यापेक्षया स्वस्थीभूतानां संख्या विंशति-गुणिता अधिका वर्तते। देशे साम्प्रतं यावत् चतुश्चत्वारिंशदधिक-त्रिशतोत्तर-द्विपंचाशत्-सहस्रोत्तर

चमुर्लक्ष्यसंख्याकानि उल्लिखितानि। स्वास्थ्यमन्त्रालयेन समुदीरितं यत् कोरोना संक्रमणस्य सप्तसप्तति-प्रतिशत-मितानि प्रकरणानि दश राज्येषु पंजीकृतानि। एतद्राज्येषु राष्ट्रियराजधानीक्षेत्रं दिल्ली-महाराष्ट्रं-केरलं-पश्चिमबंगालं-हरियाणा-राजस्थानं चेति राज्याणि अन्यतमानि। स्वास्थ्य-मन्त्रालयेन स्पष्टीकृतं यत् स्वास्थ्य-कर्मिणां कोरोना-प्रतिरोधि-वीराणां अनवरत-प्रयासेन कोरोना-संकान्तजनेषु नैयून्यम् आपद्यते इति। प्रियश्रोतार:। भवन्तोSपि कोरोना संक्रमणं परास्तुं सन्नधा: भवन्तु, मुखनासिकाच्छादकं सामाजिक-दौर्यानुपालनं च सर्वदैव अवधारयन्तु यतोहि कोरोना-प्रतरोधि-नियमपालनमेव कुशाग्रबुद्धि-परिचायकम् अस्ति इति।

**कोविड टेस्टिंग**

विगते अहोरात्रे नवति-सहस्रोत्तर-दशलक्ष-कोरोना-प्रतिदर्श-परीक्षणानि अनुष्ठितानि। अनेन सदैव कोरोना महामार्या: षष्ठी-लक्षाधिक-त्रयोदशकोटि-परीक्षणानि सम्पादितानि। केन्द्रप्रशासनं भारतीय-चिकित्सानुसन्धानपरिषद् अनवरतं चिकित्सकीयं सौविध्यं विवर्धयत्। अधुना भारतस्य कोरोना-प्रतिदर्श-परीक्षणक्षमता प्रत्यह्नि पंचादशलक्ष-संख्यां यावत् विवर्धिता। अनने समेषां कोरोना-परीक्षणं भविष्यति इति स्पष्टीभवति।

**निवार चक्रवात**

निवाराख्यो चक्रवात: ह्य: रात्रौ समुद्रतटम् अतिक्रान्त: सम्प्रति भारतीय ऋतु विभागेन अस्य शिथिलताया: संभावना प्रकटीकृता अस्ति। अनेन कारणेन तमिलनाडो: उत्तरक्षेत्रेषु विद्यमानजनपदानां केषुचित् क्षेत्रेषु धारासार वृष्टि: सम्भाव्यते। विगत चतुर्विशंति होराषु तमिलनाडो: कडलूरस्थानके अपि च चेन्नईनगरे अतिवृष्टि: जाता। एते स्थले जलपूरिते जाते द्वेएवालक्ष्य राज्यस्य उपमुख्यमन्त्रिणा ओ. पन्नीरसेलवम्-इत्याव्येन जलपुरितस्थानयो: यात्रा कृता। चक्रवातोSयं मध्यरात्र्यनन्तरं पुद्दुचेर्या: तटियक्षोत्राणि प्राप्त:। प्रात: षड्वादनातन्तरं वृष्टि: समाप्ता तथापि केषुचित् स्थलेषु जलविन्दू अपतन्।

**मन की बात**

प्रधानमन्त्री नरेन्द्रमोदी आगामि-रविवासरे स्वीये "मन की बात" इति कार्यक्रमे देशवासिभि: साकं विचारविनिमयं करिष्यति। "मन की बात" इति मासिक कार्यक्रमस्य इदं एकसप्ततितमं संस्करणं भविता। अस्य कार्यक्रमस्य प्रसारणं आकाशवाण्या: दूरदर्शनस्य च सर्वाभि: वाहिनीभि: प्रसारयिष्यते। अपि च आकाशवाण्या: वेवफलके www.newsonair इत्यत्रापि द्रष्टुं शक्यते। अयं कार्यक्रम: आकाशवाणी-दूरदर्शनम्, प्रधानमन्त्री कार्यालय:, सूचना-प्रसारणमन्त्रालय: इत्येतेषां Youtube वाहिनीष्वपि

द्रष्टुं शक्यते इति। प्रधानमन्त्रिण: सम्बोधनानन्तरं अनुक्षणं अयं "मन की बात" कार्यक्रम: क्षेत्रीय-भाषाष्वपि श्रोतों शक्यते। क्षेत्रीय-भाषासु अस्य पुन: प्रसारणम् रात्रौ अष्टवादने भविता।

प्रधानमन्त्रिण: अस्मै कार्यक्रमाय देशवासिन: स्वीय-परामर्शं "नमो" इति चरिवष्णुतन्त्रमाध्यमेन MyGOV (माई गॉव) इति अन्तर्जालीयपटलद्वारा अथवा **एकम् अष्ट शून्यं शून्यं एकम् एकम् सप्त अष्ट शून्यं शून्यं (1800-11-7800)** इति मुक्तदूरभाषसंख्यया अपि प्रेषयितुं शक्यन्ते इति।

**।। इति वार्ता: ।।**